# THE ŚIŚUPĀLAVADHA

OF

# MĀGHA

WITH

The Commentary (Sarvankaṣā) of Mallinātha.

---

EDITED BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT DURGĀPRASĀD

AND

PAṆḌIT S'IVADATTA,

OF JAYPORE.

---

**Eleventh Edition.**

---

REVISED WITH FOOT-NOTES ETC., BY

NĀRĀYAṆ RĀM ĀCHĀRYA "KĀVYATĪRTH"

WITH CO-OPARATION OF THE S'ĀSTRIMAṆḌAL.

---

PUBLISHED BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR "NIRNAYA-SĀGAR" PRESS,

BOMBAY.

1940.

*Price 2¾ Rupees.*

श्रीः ।

श्रीदत्तकसूनुमहाकविश्रीमाघप्रणीतं

# शिशुपालवधम् ।

महामहोपाध्यायकोलाचलमल्लिनाथसूरिकृतया
सर्वंकषाख्यया व्याख्यया समुल्लसितम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना

पण्डितदुर्गाप्रसादेन

लवपुरीयराजकीयपाठशालाप्रधानाध्यापकेन

महामहोपाध्यायदाधीचपण्डितशिवदत्तेन च

पूर्वसंस्कृतस्यास्य

एकादशं संस्करणम्

श्रीमदिन्दिराकान्तचरणान्तेवासिना

नारायण राम आचार्य "काव्यतीर्थ" इत्यनेन

शास्त्रिमण्डलसाहाय्येन परिशिष्टादिभिः

समलंकृत्य संशोधितम् ।

मुम्बय्यां

शाके १८६१, सन १९४० वत्सरे

पाण्डुरङ्ग जावजी इत्येतैः,

स्वीये निर्णयसागरमुद्रणयन्त्रालयेऽङ्कयित्वा च प्रकाशितम् ।

# उपोद्घातः ।

इह खलु निखिलेऽपि भारते वर्षे महाकविपदवीमारुरुक्षुभिश्छात्रैः सत्स्वपि हरविजयादिषु परःशतेषु काव्यरत्नेषु लघुत्रयीति नाम्ना प्रसिद्धं कालिदासप्रणीतं काव्यत्रयं बृहत्त्रयीति नाम्ना प्रथितं किरातार्जुनीयं, शिशुपालवधं, नैषधीयचरितं चेति काव्यत्रयमहरहः क्रमेणाभ्यस्यते सर्वत्र । तत्र बृहत्त्रय्यां निखिलमहाकाव्यलक्षणाक्रान्ततयातिप्रसन्नगम्भीरतयात्युपयुक्तव्याकरणप्रयोगप्राचुर्येणातिव्युत्पादकतया च कविमूर्धन्य-माघप्रणीतं शिशुपालवधकाव्यमेव नायकायते ।

तस्य च प्रणेता दत्तकसूनुर्माघकविः कस्मिन्समये कतमं जनपदं जन्मना भूषयांचकारेति विचारः प्रस्तूयते—तत्र तावद्बल्लालपण्डितसंकलिते **भोजप्रबन्धे**—"ततोऽन्यदा राजनि सिंहासनासीने श्रीभोजे द्वाःस्थः प्रणम्य राजानं प्राह—'राजन्, गुर्जरदेशादागत्य माघनामा पण्डितवरो दुर्भिक्षेणातिविडम्बितो देवस्य नगराद्बहिस्तिष्ठति । तेन च दारिद्र्यविडम्बितेन पण्डितेन स्वपत्नी प्रेषिता । सा च भवनद्वारि वर्तते' । राजा—'प्रवेशय' । ततो माघपण्डितस्य पत्नी प्रविश्य राज्ञे पत्रं प्रयच्छति । राजा तदादाय वाचयति—'कुमुदवनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः । उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिलसितानां ही विचित्रो विपाकः ॥' ( शिशुपालवधे ११।६४ ) राजा तदद्भुतगुणं प्रभातवर्णनमाकर्ण्य लक्षत्रयं दत्त्वा माघपत्नीं प्रति प्राह—'मातः, इदं मया भोजनाय दीयते । प्रातरहं माघपण्डितं नमस्कर्तुमागमिष्यामि' । ततः सा माघपत्नी तदादाय स्वस्थानमागच्छन्ती याचकव्रातात्स्वभर्तुः शारदचन्द्रकिरणगौरान्गुणाञ्श्रुत्वा तेभ्यो याचकेभ्यो निखिलमपि धारेन्द्रदत्तं वित्तं दत्तवती । दत्त्वा च माघपण्डितं प्राह—'नाथ, राज्ञा भोजेनाहं बहुमानिता, धनं चातिभूरि दत्तम् । मया च मार्गे आयान्त्या याचकमुखेभ्यो लोकोत्तरांस्तांस्तव गुणानाकर्ण्य तन्निखिलमपि वित्तं याचकेभ्यो दत्तम्' । माघः प्राह—'देवि, साधु कृतम् । परमन्ये याचका आयान्ति तेभ्यः किं दातव्यम् ।' ततो माघपण्डितं वस्त्रावशेषं विदित्वा कोऽप्यर्थी प्राह—'आश्वास्य पर्वतकुलं तपनोष्मतप्तमुद्दामदावविधुराणि च काननानि । नानानदीनदशतानि च पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोत्तमा श्रीः ॥' ततो माघः पत्नीं प्राह—'अर्था न सन्ति न च मुञ्चति मां दुराशा त्यागान्न संकुचति दुर्ललितं मनो मे । याच्ञा च लाघवकरी स्ववधे च पापं प्राणाः स्वयं व्रजत किं नु विलम्बितेन ॥ [1]दारिद्र्यानलसंतापः शान्तः संतोषवारिणा । याचकाशाविघातान्तर्दाहः केनोपशाम्यति ॥' देवि, किं बहुना । चित्ते कष्टं किमपि नास्ति । परं तथाप्युच्यते—'न भिक्षा दुर्भिक्षे पतति दुरवस्थाः कथमृणं लभन्ते कर्माणि द्विजपरिवृढान्कारयति कः । अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते क्व यामः किं कुर्मो गृहिणि गहनो जीवनविधिः ॥' ततस्तथाविधामवस्थां माघस्य विलोक्य सर्वे

१ सुभाषितावलौ भट्टप्रद्युम्ननाम्ना समुद्धृतोऽयं श्लोकः.

याचका यथास्थानमगुः । याचकेषु यथास्थानं गच्छत्सु माघः प्राह—'व्रजत व्रजत प्राणा अर्थिनि व्यर्थतां गते । पश्चादपि हि गन्तव्यं क्व सार्थः पुनरीदृशः ॥' ततो माघपत्नी स्वामिनि परलोकं प्राप्ते प्राह—'सेवन्ते स्म गृहं यस्य दासवद्भूभुजः पुरा । हाऽद्य भार्यासहायोऽयं मृतो वै माघपण्डितः ॥' ततो राजा माघपण्डितं विपन्नं विदित्वा निजनगराद्ब्राह्मणशतावृतो मौनी पद्भ्यामेव तत्रागात् । ततो माघपत्नी राजानं वीक्ष्य प्राह—'राजन्, यदि पण्डितस्तव देशं प्राप्तस्तर्हि गृहमेव प्राप्तः । ततो देवेन कार्यशेषं सम्यक्संपादनीयम् ।' राजा तं विपन्नं माघपण्डितं नर्मदातीरं प्रापयामास । सा च माघपत्नी तेन सह वह्निप्रवेशं कृतवती । ततो राजा माघस्योत्तरक्रियां पुत्र इव चक्रे । ततो दिवं गते माघे राजा शोकाकुलो विशेषेण कालिदासविरहेण तथा सकलविद्वत्प्रवसनेन च दिने दिने कार्श्येन प्रतिपचन्द्राकृतिरासीत् ।" इत्ययं प्रबन्धः समुपलभ्यते ।

जैनमेरुतुङ्गाचार्येण १३६१ संवत्सरे प्रणीते प्रबन्धचिन्तामणौ च—"अथ श्रीभोजः श्रीमाघपण्डितविद्वत्तां पुण्यवत्तां च सततमाकर्ण्य तद्दर्शनोत्सुकतया राजादेशैः सततं प्रेष्यमाणैः श्रीमालनगराद्धिमसमये समानीय सबहुमानं भोजनादिभिः सत्कृत्य तदनु राजोचितान्विनोदान्दर्शयन् रात्रावारात्रिकावसरानन्तरं संनिहिते स्वसंनिभे पल्यङ्के माघपण्डितं नियोज्य तस्मै स्वशीतरक्षामुपनीय प्रियालापांश्चिरं कुर्वाणः सुखं सुष्वाप । प्रातर्माङ्गल्यतूर्यघोषैर्विनिद्रं नृपं स्वस्थानगमनाय माघपण्डित आपृष्टवान् । विस्मयापन्नहृदयेन राज्ञा दिने भोजनाच्छादनादिसुखं पृष्टः स कदन्नसदन्नवार्ताभिरलं शीतभारेण श्रान्तं विज्ञपयन्खिद्यमानेन राज्ञा कथंकथंचिदनुज्ञातः पुरोपवनं यावद्भू-भुजानुगम्यमानो माघपण्डितेन स्वागमनप्रसादेन संभावनीयोऽहमिति विज्ञप्तो नृपा-नुज्ञातः स्वं पदं भेजे । तदनु कतिपयदिनैः श्रीभोजस्तद्विभवभोगसामग्रीदिदृक्षया श्रीश्रीमालनगरं प्राप्तः । माघपण्डितेन प्रत्युद्गमादियथोचितभक्त्यावर्जितः ससैन्यस्तन्म-न्दुरायां ममौ । स्वयं तु माघपण्डितस्य सौधमध्यास्य संचारकभुवं काञ्चनबद्धामव-लोक्य स्नानादनु देवतावसथोर्व्यां मणिमरकतकुट्टिमशैवलवल्लरीयुग्जलभ्रान्त्या धौता-म्बरीयं संवृण्वन् सौवस्तिकेन ज्ञापितवृत्तान्तस्तदैव तद्देवतार्चानन्तरं निवृत्ते मन्त्रावसरे अशनसमयसमागतां रसवतीमास्वादयन्नाकालिकैरदेशजैर्व्यञ्जनैः फलादिभिश्चित्रीयमा-णमानसः संस्कृतपयःशालिशालिनीं रसवतीमाकण्ठमुपभुज्य भोजनान्ते चन्द्रशालाम-धिरुह्याश्रुतादृष्टापूर्वकाव्यकथाप्रबन्धप्रेक्ष्यादीनि प्रेक्षमाणः शिशिरसमयेऽपि संजाताक-स्मिकग्रीष्मभ्रान्त्या संवीतसितस्वच्छवसनस्तालवृन्तकरैरनुचरैर्वीज्यमानोऽमन्दचन्द-नालेपनेपथ्यः सुखनिद्रया तां क्षणदां क्षणमिवातिवाह्य प्रत्यूषे शङ्खनिःस्वनाद्विगतनिद्रो हिमसमये ग्रीष्मावतारव्यतिकरो माघपण्डितेन ज्ञापित इति प्रतिसमयं सविस्मयः कति दिनान्यवस्थाय स्वदेशगमनायापृच्छत् । स्वयं करिष्यमाणनव्यभोजस्वामिप्रसाद-प्रदत्तपुण्यो मालवमण्डलं प्रति प्रतस्थे । तथा निजजन्मदिने जनकेन नैमित्ति-काज्जातके कार्यमाणे 'पूर्वमुदितोदितसमृद्धिर्भूत्वा प्रान्ते गलितविभवः किंचिचरणयो-

राविर्भूतश्वयथुविकारः पञ्चत्वमाप्स्यति' इति निमित्तविदा निवेदितां विभवसंभारेण तां ग्रहगतिं निराचिकीर्षुणा माघपित्रा संवत्सरशतप्रमाणे मनुजायुषि षट्त्रिंशत्सहस्राणि दिनानि भविष्यन्तीति विमृश्य नाणकपरिपूर्णास्तावत्संख्याकान्हारकान्कारितनव्यकोषेषु निवेश्य तदधिकां परां भूतिं शतशः समर्प्य प्रदत्तमाघनाम्ने सुताय कुलोचितां शिक्षां वितीर्य कृतकृत्यमानिना तेन विपेदे। तदनन्तरमुत्तराशापतिरिव प्राज्यसाम्राज्यो विद्वज्जनेभ्यः श्रियं तदिच्छया यच्छन्नमानैर्दानैरर्थिसार्थं कृतार्थयंस्त्वनोंगविधिभिः स्वममानुषावतारमिव दर्शयन् विरचितशिशुपालवधाभिधानमहाकाव्यचमत्कृतविद्वज्जनः स प्रान्ते पुण्यक्षयात्क्षीणवित्तो विपत्तिपाते स्वविषये स्थातुमप्रभूष्णुः सकलत्रो मालवमण्डले गत्वा धारायां कृतावासः पुस्तकग्रहणकार्पणपूर्वकं श्रीभोजात्कियदपि द्रव्यमानेयमिति तत्र पत्नीं प्रस्थाप्य यावत्तदाशया माघपण्डितश्चिरं तस्थौ तावत्तथावस्थां श्रीभोजस्तत्पत्नीं विलोक्य ससंभ्रमः शलाकान्यासेन तत्पुस्तकमुन्मुद्य काव्यमद्राक्षीत्। 'कुमुदवनमपश्रि—'(भोजप्रबन्धस्थ एव श्लोकः)। अथ काव्यार्थमवगम्य का कथा ग्रन्थस्य, केवलमस्यैव काव्यस्य विश्वंभरा मूल्यमल्पम्। समयोचितस्यानुच्छिष्टस्य हीशब्दस्य पारितोषिके क्षितिपतिर्लक्षद्रव्यं वितीर्य तां विससर्ज। सापि ततः संचरन्ती विदितमाघपण्डितपत्नी कैश्चिद्भिरर्थिभिर्याच्यमाना तत्पारितोषिकं तेभ्यः समस्तमपि वितीर्य यथावस्थिता गृहमुपेयुषी तद्वृत्तान्तं विज्ञापनापूर्वं किंचिच्चरणस्फुरितशोकाय पत्ये निवेदयामास। अथ त्वमेव मे शरीरिणी कीर्तिरिति श्लाघमानस्तदा स्वगृहमागतं कमपि भिक्षुं वीक्ष्य भवने तदुचितं किमपि देयमपश्यन् संजातनिर्वेद इदमवादीत्—'अर्था न सन्ति न च–॥१॥ दारिद्र्यानल–॥ २ ॥ व्रजत व्रजत–॥ ३ ॥ न भिक्षा दुर्भिक्षे–॥ ४ ॥' (श्लोकचतुष्टयं भोजप्रबन्धवत्)—क्षुत्क्षामः पथिको मदीयभवनं पृच्छन्कुतोऽप्यागतस्तत्किं गेहिनि किंचिदस्ति यदयं भुङ्क्ते बुभुक्षातुरः। वाचास्तीत्यभिधाय नास्ति च पुनः प्रोक्तं विनैवाक्षरैः स्थूलस्थूलविलोललोचनजलैर्बाष्पाम्भसां बिन्दुभिः ॥ ५ ॥' इति तद्वाक्यान्त एव स माघपण्डितः पञ्चत्वमवाप। प्रातस्तं वृत्तान्तमवगम्य श्रीभोजेन श्रीमालेषु तज्ज्ञातिषु धनवत्सु सत्सु तस्मिन्पुरुषरत्ने विनष्टे क्षुधाबाधिते सति भिल्लमाल इति तज्ज्ञातेर्नाम निर्ममे ॥" इत्ययं प्रबन्धो वर्तते ॥—

श्रीप्रभाचन्द्रेण १३३४ मिते विक्रमाब्दे प्रणीते प्रद्युम्नसूरिसंशोधिते प्रभावकचरिते चतुर्दशे शृङ्गे—

"**श्रीसिद्धर्षिः** श्रियो देयाद्धियामध्यामधामभूः (?)।
निर्ग्रन्थग्रन्थतामापुर्यद्ग्रन्थाः सांप्रतं भुवि ॥ १ ॥

---

१ सुरतनगरात् शेठ भगवानदास केवलदासजीनाम्ना मन्मित्रेण प्रहिते १८२७ मिते विक्रमाब्दे लिखिते शिशुपालवधपुस्तके समाप्तौ 'इति श्रीभिन्नमालववास्तव्यदत्तकसूनोर्महावैयाकरणस्य माघस्य कृतौ शिशुपालवधे–' इत्याद्यस्ति. स च भिन्नमालवनामा ग्रामोऽधुना 'भिनमाला' इति नाम्ना ख्यातो गुजरात-मारवाडदेशयोः सीमायां वर्तत इति केचिद्वदन्ति.

श्रीसिद्धर्षिप्रभोः पान्तु वाचः परिपचेलिमाः ।
अनाद्यविद्यासंस्कारा यदुपास्तेर्भिदेलिमाः ॥ २ ॥
सुप्रभः पूर्वजो यस्य सुप्रभः प्रतिभावताम् ।
बन्धुर्बन्धुरभाग्यस्य यस्य माघः कवीश्वरः ॥ ३ ॥
चरितं कीर्तयिष्यामि तस्य त्रस्यज्जडाशयम् ।
भूभृच्चक्रचमत्कारि वारिताखिलकल्मषम् ॥ ४ ॥
अजर्जरश्रियां धाम वेषालक्ष्यजरज्जरः (?) ।
अस्ति गुर्जरदेशोऽन्यसज्जराजन्यदुर्जरः ॥ ५ ॥
तत्र श्रीमालमित्यस्ति पुरं मुखमिव क्षितेः ।
चैत्योपरिस्थकुम्भालिर्यत्र चूडामणीयते ॥ ६ ॥
प्रासादा यत्र दृश्यन्ते मत्तवारणराजिताः ।
राजमार्गाश्च शोभन्ते मत्तवारणराजिताः ॥ ७ ॥
जैनालयाश्च सन्त्यत्र नवं धूपगमं श्रिताः ।
महर्षयश्च निःसङ्गा न बन्धूपगमं श्रिताः ॥ ८ ॥
तत्रास्ति हास्तिकाश्वीयापहस्तितरिपुव्रजः ।
नृपः श्रीवर्मलाताख्यः शत्रुमर्मभिदाक्षमः ॥ ९ ॥
तस्य सुप्रभदेवोऽस्ति मन्त्री मितततपाः किल ।
तस्य पुत्रावुभावंसाविव विश्वंभरक्षमौ ॥ १० ॥
आद्यो दत्तः स्फुरद्वृत्तो द्वितीयश्च शुभंकरः ।
दत्तवित्तोऽनुजीविभ्यो दत्त [:] चित्तसुधर्मधीः (?) ॥ ११ ॥
तस्य[1] श्रीभोजभूपालबालमित्रं कवीश्वरः ।
श्रीमाघो नन्दनो ब्राह्मीस्यन्दनः शीलचन्दनः ॥ १२ ॥
ऐदंयुगीनलोकस्य सारसारस्वतायितम् ।
शिशुपालवधं काव्यं प्रशस्तिर्यस्य शाश्वती ॥ १३ ॥
श्रीमाघोऽस्ताघधीः श्लाघ्यः प्रशस्यः कस्य नाभवत् ।
चित्तजाड्यहरा यस्य काव्यगङ्गोर्मिविप्रुषः ॥ १४ ॥
तथा शुभंकरः श्रेष्ठी विश्वविश्वप्रियंकरः ।
यस्य दानाद्भुतैर्गीतैर्ह[र्य]श्वो हर्षभूरभूत् ॥ १५ ॥
तस्याभूद्देहिनी लक्ष्मीर्लक्ष्मीर्लक्ष्मीपतेरिव ।
यया सत्यापिताः सत्यासीताद्या विश्वविश्रुताः ॥ १६ ॥
नन्दनो नन्दनोत्तंसः कल्पद्रुम इवापरः ।
यथेच्छादानतोऽर्थिभ्यः प्रथितः सिद्धनामतः ॥ १७ ॥"

इत्यादि,

---

१ दत्तकस्य.

"इत्थमुद्वेजितस्वान्तस्तेनासौ निर्ममे बुधः ।
अन्यदुर्बोधसंबद्धां प्रस्तावाष्टकसंभृताम् ॥ ९५ ॥
रम्यामुपमितिभवप्रपञ्चाख्यां महाकथाम् ।
सुबोधकवितां विद्वदुत्तमाङ्गविधूननीम् ॥ ९६ ॥" युग्मम् ॥

इत्यादि च सिद्धर्षिचरितं वर्तते ।

चरितान्ते च—

"श्रीमत्सुप्रभदेवनिर्मलकुलालंकारचूडामणिः
श्रीमन्माघकवीश्वरस्य सहजः प्रेक्षापरीक्षानिधिः ।
तद्वृत्तं परिचिन्त्य कुग्रहपरिष्वङ्गं कथंचित्कलि-
प्रागल्भ्यादपि संगतं त्यजत भो लोकद्वये शुद्धये ॥ १५५ ॥"

इति पद्यमस्ति ।

एतत्प्रबन्धत्रयविलोकनेन शिशुपालवधकाव्यकर्ता माघकविः खिस्ताब्दीयैकादशशतकोत्तरार्धे मालवदेशं शासतो धारानगराधिपतेः श्रीभोजदेवस्य समकालीन आसीदिति प्रतीयते । परमेतादृशे समयनिर्णयादिव्यतिकरे भोजप्रबन्ध-प्रबन्धचिन्तामणि-प्रभावकचरितादयो न श्रद्धापथमध्यासते । यतस्तत्रातिप्रतीतेषु बहुभिर्निर्णीतेषु विषयेष्वपि भूयान्विपर्ययः समुपलभ्यते ॥

माघकविस्तु खिस्ताब्दीयनवमशतकात्कथमपि नार्वाचीनः । यतः कश्मीरेषु नवमशतकोत्तरभागे वर्तमानः श्रीमदानन्दवर्धनाचार्यो ध्वन्यालोकस्य द्वितीयोद्द्योते—

---

१ असौ सिद्धः. २ उपमितिभवप्रपञ्चकथासमाप्तौ ( ९६२ ) मितो ग्रन्थनिर्माणसंवत्सरो लिखितः. एतदेवावलम्ब्य शार्मण्यदेशवासी क्लाटपण्डितः ( Dr. F. Klatt ) माघकवेरपि सत्तां खिस्ताब्दीयदशमशतकारम्भे स्थिरीकरोति । तद्देशीयो याकोबीपण्डितस्तु ( Prof. Jacobi ) 'We therefore cannot place Magha later than about the middle of the Sixth century' इति वदन्खिताब्दीयषष्ठशतकमध्यभागान्नार्वाचीनो माघकविरिति निश्चिनोति. याकोबीमतमेव ममापि संमतम्. यतः प्रभावकचरितमपहायान्यत्र माघस्य शुभंकरः पितृव्य आसीत्सिद्धश्च पितृव्यपुत्र इत्यादि नोपलब्धम्. केवलमियं किंवदन्त्येव. प्रभावकचरितं च जनश्रुत्याधारेण निर्मितमिति ग्रन्थारम्भे—'बहुश्रुतमुनीशेभ्यः प्राग्ग्रन्थेभ्यश्च कानिचित् । उपश्रुत्येतिवृत्तानि वर्णयिष्ये कियन्त्यपि ॥' इति ग्रन्थकृत्स्वयमेव वदति. अथ च तारानाथतर्कवाचस्पतिना वाचस्पत्ये कोषे माघपदव्याख्याने 'तावद्भा भारवेर्भाति यावन्माघस्य नोदय इत्युद्भटः' इति लिखितमस्ति, तत्र क्लाटपण्डितः 'अयं श्लोकः क्वचिदप्युद्भटग्रन्थे नोपलभ्यत' इति तारानाथमाक्षिपति. किंतूद्भटपदेन कश्मीरदेशप्रसिद्धो जयापीडसभापतिर्भट्टोद्भटस्तारानाथस्य न विवक्षितः, तेन तु ग्रन्थबहिर्भूतोऽज्ञातकर्तृनामकः श्लोक एवोद्भटपदेन व्यवह्रियते. तथा च तदीये वाचस्पत्य एव उद्भटपदव्याख्याने 'ग्रन्थबहिर्भूते लोकप्रसिद्धेऽज्ञातकर्तृके श्लोके' इति तदीयं व्याख्यानमस्ति. एतत्सर्वं पर्यालोच्य शम[illegible] शार्मण्यपण्डितेन संतोष्टव्यम्.

'त्रासाकुलः परिपतन्–' ( ५।२६ ) ( काव्यमालायां मुद्रितस्य ११४ पृष्ठे ) इत्यादिपद्यम्, 'रम्या इति प्राप्तवतीः–' ( ३।५३ ) ( काव्यमालायां मुद्रितस्य ११५ पृष्ठे ) इत्यादिपद्यं च शिशुपालवधादुदाहृतवान्। अथ च शिशुपालवधे ( २।११२ ) माघो न्यासग्रन्थं स्मरतीति न्यासप्रणेतुर्जिनेन्द्रबुद्धिपादाचार्यादधस्तनः।

गुर्जरदेशोद्भवोऽयं कविरिति पूर्वोद्धृतप्रबन्धेभ्यो लोकप्रथातश्च प्रतीयते। ग्रन्थान्ते च स्ववंशवर्णने माघकविना स्वपितामहस्य सुप्रभदेवस्याश्रयभूतः कश्चन तत्कालीनो महीपतिरपि वर्णितो यः प्रभावकचरितेऽपि स्मृतः। तत्र शिशुपालवधपुस्तकेषु धर्मनाभ, धर्मनाथ, धर्मलाभ, चर्मलात, धर्मलात, धर्मदेव, वर्मलाख्य, वर्मलात, वर्मनाम, निर्मलान्त, इति तन्नाम्नि नानाविधः पाठो दृश्यते। अतस्तद्विषये जोषमेव स्थातुमीहे। शिशुपालवधादन्यः कोऽपि ग्रन्थोऽस्य कवेर्नोपलब्धः। किंतु सुभाषितावलौ 'शीलं[1] शैलतटात्पतत्वभिजनः संदह्यतां वह्निना माश्रौषं जगति श्रुतस्य विफलक्लेशस्य नामाप्यहम्। शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु मे सर्वदा येनैकेन विना गुणास्तृणबुसप्रायाः समस्ता अमी॥' 'नारीनितम्बफलके प्रतिबध्यमाना हंसीव हेमरशना मधुरं ररास। तन्मोचनार्थमिव नूपुरराजहंसाश्चक्रन्दुरार्तमुखरं चरणावलग्नाः॥' एतच्छ्लोकद्वयं शिशुपालवधेऽनुपलभ्यमानं वल्लभदेवेन औचित्यविचारचर्चायां च 'बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते। न विद्यया केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फलाः कलाः॥' एतत्पद्यं तादृशमेव क्षेमेन्द्रेण माघनाम्ना समुद्धृतमस्तीत्यस्ति कश्चिदन्योऽपि ग्रन्थो माघकृत इत्यनुमीयते।

काव्यस्यास्यावधि ज्ञाताष्टीकाः,–( १ ) वल्लभदेवकृता संदेहविषौषधाख्या, ( २ ) रङ्गराजकृता, ( ३ ) एकनाथकृता, ( ४ ) चारित्रवर्धनकृता, ( ५ ) मल्लिनाथकृता सर्वंकषा, ( ६ ) भरतमल्लिककृता सुबोधा, ( ७ ) दिनकरमिश्रकृता सुबोधिनी, ( ८ ) गोपालकृता हसन्ती, एता अष्टौ सन्ति। एतासु मल्लिनाथकृता सर्वंकषैव सर्वाङ्गपरिपूर्णा का[2]श्मीरदेशमपहायान्यत्र सर्वत्र लब्धप्रचारा विद्वद्भिरादृता च वर्तते। मल्लिनाथपण्डितश्चान्ध्रदेशे ख्रिस्ताब्दीयचतुर्दशशतक आसीदिति नवीनविदुषां निर्णयः।

सर्वंकषासमेतमेतत्काव्यं कलिकाताकाश्यादिषु बहुशो मुद्रितमपि सर्वाङ्गपूर्णतां दर्शनीयतां च न गतमिति पुनर्मुद्रणे मुख्यो हेतुः। तत्र १७६९ मिते शकाब्दे कलिकातानगरे श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यादिविद्वद्वरैः संशोध्य मुद्रितं पुस्तकमादाय पुनरपि प्राचीनेन हस्तलिखितेन सर्वंकषापुस्तकेन संवाद्य तदाधारेणैतन्मुद्रणमकारि। अत्र च विंशसर्गान्ते सर्वेषु मुद्रितपुस्तकेषु प्रायो हस्तलिखितेष्वपि दुर्लभा श्लोकद्वयस्य सर्वंकषा, तदग्रे कविवंशवर्णनात्मकश्लोकपञ्चकस्य, पञ्चदशे सर्गे 'प्रक्षिप्ता एते' इति मन्यमानेन मल्लिनाथेनाव्याख्यातानां चतुस्त्रिंशच्छ्लोकानां च वल्लभदेवकृता टीका भूयसा यत्नेन संपाद्य यथास्थानं निवेशिता। मन्मित्रराजगुरुपर्वणीकरोपाह्वनारायणभट्टानां संग्रहादुपलब्धात् १२९९ मिते शकाब्दे लिखितान्मूलशिशुपालवधपुस्तकादुपयुक्तानि

---

१ अयं श्लोको भर्तृहरेर्नीतिशतकेऽप्युपलभ्यते. २ काश्मीरकैस्तु वल्लभदेवकृतटीकैवोपयुज्यते.

पाठान्तराणि च क्वचिद्दत्तानि । ग्रन्थान्ते चैकोनविंशसर्गस्थगोमूत्रिकामुरजचक्रबन्धादिश्लोकानां चित्राणि, टीकायां मल्लिनाथेनोद्धृतानां ग्रन्थग्रन्थकर्तॄणां तत्तत्स्थलोल्लेखपूर्वकं नाममालां, ग्रन्थस्थनिखिलश्लोकानामकारादिवर्णक्रमेणानुक्रमणीं च न्यस्तवानस्मि । शोधनसमये च जयपुरराजकीयपाठशालायां व्याकरणाध्यापकः पण्डितशिवदत्तशर्मा दाधीचः कतिपयस्थलेषु प्रायो व्याकरणविषयकं टिप्पणमुट्टङ्कितवान्, कृतवांश्च शोधनेऽपि यत्साहाय्यं तत्तदुपकारं मुहुः स्मरामि ।

एवमेतद्ग्रन्थमुद्रणे प्रयत्नमास्थितस्यापि मम मतिमान्द्याद्दृष्टिदोषात्प्रमादाद्वा समुत्पन्नाननल्पानप्यवद्यानुपेक्ष्य काव्यगुणगौरवेणैव गुणैकपक्षपातिनो निर्मत्सरा विद्वांसस्तोषमेष्यन्ति, भविष्यन्ति च परमेश्वरानुग्रहात्सफलसमीहिता इति भृशमाशास्ते

विदुषामनुचरो
दुर्गाप्रसादः ।

जयपुरराजधानी ।
प्रथम अधिक भाद्रशुक्ल ५ संवत् १९४७.

## Preface to the Eleventh Edition.

A word of explanation is necessary for the numerous changes introduced in this edition. The past editions have been more or less reprints of the original edition. No attempt was made to remove the various inconsistencies between text and commentary that were in the first edition and thus these have persisted throughout so far. It was useless to try to reconcile the irreconcileable inconsistencies and I thought of beginning at the very beginning. Efforts to get Mss. proved in vain. I had therefore to be content with merely pointing out in the foot-notes the inconsistencies and adopting in the text the plausible readings. This process continued till I reached the end of the first part, when happily or unhappily, I came by two Mss. one of which at least was such as gave no scope to doubt its authority. But the work so far edited was already out of the press. Nevertheless I decided to avail myself of the Mss. for the purpose of the second part. It was indeed a very pleasant surprise that the inconsistencies that were in this part too, were not found in the Mss. and it was here that I realised why it is not advisable to rely merely on the printed edition for the purpose of bringing out a fresh edition and how Mss. help us to produce a text which bears the stamp of authority. But as said above nothing could be done so far as the first part was concerned and I leave it to the future edition to bring it in a line with the second.

Mention should be made here of the Appendix which has been added giving extracts from the Mahābhārata relevent to the episode as presented by Māgha.

My sincere thanks are due to Mr. K. V. Soman who bore the brunt of the task in comparing the Mss. with the previous edition.

N. R. Acharya.

# परिशिष्टम् ।

शिशुपालवधकाव्यमेतत् महाभारतीय-सभापर्वान्तर्गत-राजसूय-अर्घाहरण-शिशुपालवधपर्वगतप्रतिपाद्यशिशुपालवधकथामाश्रित्य व्यररचत्कविशिरोमणिर्माघकविरिति विभाव्यते, किंच महाभारते 'अपराधशतं क्षाम्यं मातुरस्यैव याचने । दत्तं मया याचितं च तद्वै पूर्णं हि पार्थिवाः' इति नृपानुक्त्वा सद्यः सभायामेव श्रीकृष्णः शिशुपालस्य शिरो व्यपाहरदिति वर्णनं वरीवर्ति, काव्ये चैतस्मिन् कृष्णः समरमूर्ध्नि शिशुपालं जघानेत्येतावानेव विशेषो दरीदृश्यते । तथा च महाभारतीयकथाश्रयणेनैव काव्यस्यास्य विरचितत्वात्तयोर्मिथःसाम्यज्ञापनायात्र समुद्ध्रियन्ते कतिचिदध्यायगतश्लोकास्तत्रत्याः । माघश्च यं यं महाभारतीयश्लोकार्थमनुसृत्य काव्यश्लोकं ग्रथितवान् स च श्लोकश्चिह्नितः काव्याङ्कप्रदर्शनेन यत्र तत्र ।

वैशम्पायन उवाच—

अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह ।
ईजितुं राजसूयेन साधनान्युपचक्रमे ॥
ततस्त्वाज्ञापयामास पाण्डवोऽरिनिबर्हणः ।
सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्वशः ॥
अस्मिन्क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः ।
तथोपकरणं सर्वं मङ्गलानि च सर्वशः ॥
अधियज्ञांश्च संभारान्धौम्योक्तान्क्षिप्रमेव हि ।
समानयन्तु पुरुषा यथायोगं यथाक्रमम् ॥
सर्वकामाश्च कार्यन्तां रसगन्धसमन्विताः ।
मनोरथप्रीतिकरा द्विजानां कुरुसत्तम ॥
तद्वाक्यसमकालं च कृतं सर्वं न्यवेदयत् ।
सहदेवो युधां श्रेष्ठो धर्मराजे युधिष्ठिरे ॥
ततो द्वैपायनो राजन्नृत्विजः समुपानयत् ।
वेदानिव महाभागान्साक्षान्मूर्तिमतो द्विजान् ॥
स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः ।
धनञ्जयानामृषभः सुसामा सामगोऽभवत् ॥
याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्युसत्तमः ।
पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत् ॥
एतेषां शिष्यवर्गाश्च पुत्राश्च भरतर्षभ ।
बभूवुर्होत्रगाः सर्वे वेदवेदाङ्गपारगाः ॥
ते वाचयित्वा पुण्याहमूहयित्वा च तं विधिम् ।
शास्त्रोक्तं पूजयामासुस्तद्देवयजनं महत् ॥
तत आज्ञापयामास स राजा राजसत्तमः ।
सहदेवं तदा सद्यो मन्त्रिणं पुरुषर्षभः ॥
आमन्त्रणार्थं दूतांस्त्वं प्रेषयस्वाऽऽशुगान्द्रुतम् ।

उपश्रुत्य वचो राज्ञः स दूतान्प्राहिणोत्तदा ॥
आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान्भूमिपानथ ।
विशश्च मान्याञ्शूद्रांश्च सर्वानानयतेति च ॥

वैशम्पायन उवाच—

समाज्ञप्तास्ततो दूताः पाण्डवेयस्य शासनात् ।
आमन्त्रयांबभूवुश्च आनयंश्चाऽपरान्द्रुतम् ॥
तथा परानपि नरानात्मनः शीघ्रगामिनः ॥
ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम् ।
दीक्षयाञ्चक्रिरे विप्रा राजसूयाय भारत ॥
दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिरः ।
जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः ॥
अमात्यैश्च नरश्रेष्ठो धर्मो विग्रहवानिव ।
आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः ॥
सर्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः ।
तेषामावसथांश्चक्रुर्धर्मराजस्य शासनात् ॥
बह्वन्नाच्छादनैर्युक्तान्सगणानां पृथक्पृथक् ।
सर्वर्तुगुणसंपन्नाञ्शिल्पिनोऽथ सहस्रशः ॥
भुञ्जतां चैव विप्राणां वदतां च महास्वनः ।
अनिशं श्रूयते तत्र मुदितानां महात्मनाम् ॥
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवंप्रकाराः संजल्पाः श्रूयन्ते स्मात्र नित्यशः ॥
गवां शतसहस्राणि शयनानां च भारत ।
रुक्मस्य योषितां चैव धर्मराजः पृथग्ददौ ॥
प्रावर्ततैवं यज्ञः स पाण्डवस्य महात्मनः ।
पृथिव्यामेकवीरस्य शक्रस्येव त्रिविष्टपे ॥
ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम् ।
नकुलं हस्तिनपुरं भीष्माय पुरुषर्षभः ॥ (इति ३३ अध्यायः ।)

वैशम्पायन उवाच—

स गत्वा हास्तिनपुरं नकुलः समितिंजयः ।
भीष्ममामन्त्रयांचक्रे धृतराष्ट्रं च पाण्डवः ॥
सत्कृत्याऽऽमन्त्रितास्तेन आचार्यप्रमुखास्ततः ।
प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरःसराः ॥
संश्रुत्य धर्मराजस्य यज्ञं यज्ञविदस्तदा ।
अन्ये च शतशस्तुष्टैर्मनोभिर्भरतर्षभ ॥
द्रष्टुकामाः सभां चैव धर्मराजं च पाण्डवम् ।
दिग्भ्यः सर्वे समापेतुः क्षत्रियास्तत्र भारत ।

समुपादाय रत्नानि विविधानि महान्ति च ॥
धृतराष्ट्रश्च भीष्मश्च विदुरश्च महामतिः ।
दुर्योधनपुरोगाश्च भ्रातरः सर्वे एव ते ॥
एते चान्ये च बहवो राजानो मध्यदेशजाः ।
आजग्मुः पाण्डुपुत्रस्य राजसूयं महाक्रतुम् ॥
ददुस्तेषामावसथान्धर्मराजस्य शासनात् ।
बहुभक्ष्यान्वितान्राजन्दीर्घिकावृक्षशोभितान् ॥
तथा धर्मात्मजः पूजां चक्रे तेषां महात्मनाम् ।
सत्कृताश्च यथोद्दिष्टाञ्जग्मुरावसथान्नृपाः ॥
विश्रान्तास्ते ततोऽपश्यन्भूमिपा भूरिदक्षिणम् ।
वृतं सदस्यैर्बहुभिर्धर्मराजं युधिष्ठिरम् ॥
तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महर्षिभिः ।
भ्राजते स्म तदा राजन्नाकपृष्ठं यथामरैः ॥ (इति ३४ अध्यायः ।)

वैशम्पायन उवाच—

पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः ।
अभिवाद्य ततो राजन्निदं वचनमब्रवीत् ॥
भीष्मं द्रोणं कृपं द्रौणिं दुर्योधनविविंशती ।
अस्मिन् यज्ञे भवन्तो मामनुगृह्णन्तु सर्वशः ॥
इदं वः सुमहच्चैव यदिहाऽस्ति धनं मम ।
प्रणयन्तु भवन्तो मां यथेष्टमभिमन्त्रिताः ॥
एवमुक्त्वा स तान्सर्वान्दीक्षितः पाण्डवाग्रजः ।
युयोज स यथायोगमधिकारेष्वनन्तरम् ॥
कथं तु मम कौरव्यो रत्नदानैः समाप्नुयात् ।
यज्ञमित्येव राजानः स्पर्धमाना ददुर्धनम् ॥
भवनैः सविमानाग्रैः सोदर्कैर्बलसंवृतैः ।
लोकराजविमानैश्च ब्राह्मणावसथैः सह ॥
राजभिश्च समावृत्तैरतीव श्रीसमृद्धिभिः ।
अशोभत सदो राजन्कौन्तेयस्य महात्मनः ॥
ऋद्ध्या च वरुणं देवं स्पर्धमानो युधिष्ठिरः ।
षडग्निनाऽथ यज्ञेन सोऽयजद्दक्षिणावता ॥
सर्वाञ्जनान्सर्वकामैः समृद्धैः समतर्पयत् ॥
अन्नवान्बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ।
रत्नोपहारसंपन्नो बभूव स समागमः ॥ (इति ३५ अध्यायः ।)

वैशम्पायन उवाच—

ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।
अन्तर्वेदीं प्रविविशुः सत्कारार्हा महर्षयः ॥

कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ॥
इदमेवं न चाऽन्येवमेवमेवं न चान्यथा ।
प्रत्यूचुर्बहवस्तत्र वितण्डावादिनो द्विजाः ॥
न तस्यां सन्निधौ शूद्रः कश्चिदासीन्न चाव्रती ।
अन्तर्वेद्यां तदा राजन्युधिष्ठिरनिवेशने ॥
तां तु लक्ष्मीवतो लक्ष्मीं तदा यज्ञविधानताम् ।
तुतोष नारदः पश्यन्धर्मराजस्य धीमतः ॥
अथ चिन्तां समापेदे स मुनिर्मनुजाधिप ।
नारदस्तु तदा पश्यन्सर्वक्षत्रसमागमम् ॥
सस्मार च पुरावृत्तां कथां तां पुरुषर्षभ ।
अंशावतरणे याऽसौ ब्रह्मणो भवनेऽभवत् ॥
देवानां संगमं तं तु विज्ञाय कुरुनन्दन ।
नारदः पुण्डरीकाक्षं सस्मार मनसा हरिम् ॥
साक्षात्स विबुधारिघ्नः क्षत्रे नारायणो विभुः ।
प्रतिज्ञां पालयंश्चेमां जातः परपुरंजयः ॥
संदिदेश पुरा योऽसौ विबुधान्भूतकृत्स्वयम् ।
अन्योन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ ॥
इति नारायणः शम्भुर्भगवाञ्जगतः प्रभुः ।
आदिश्य विबुधान्सर्वानजायत यदुक्षये ॥
क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः ।
परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् ॥
अहो बत महद्भूतं स्वयंभूर्यदिदं स्वयम् ।
आदास्यति पुनः क्षत्रमेवं बलसमन्वितम् ॥
इत्येतां नारदश्चिन्तां चिन्तयामास धर्मवित् ।
हरिं नारायणं ज्ञात्वा यज्ञैरिज्यं तमीश्वरम् ॥
तस्मिन्धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः ।
महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः ॥
ततो भीष्मोऽब्रवीद्राजन्धर्मराजं युधिष्ठिरम् ।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥
आचार्यमृत्विजं चैव संयुजं च युधिष्ठिर ।
स्नातकं च प्रियं प्राहुः षडर्घ्यार्हान्नृपं तथा ॥ (शिशु० १४।५५)
एतानर्घ्यानभिगतानाहुः संवत्सरोषितान् ।
त इमे कालपूगस्य महतोऽस्मानुपागतः ॥ (शिशु० १४।५६)
एषामेकैकशो राजन्नर्घ आनीयतामिति ।
अथ चैषां वरिष्ठाय समर्थायोपनीयताम् ॥ (शिशु० १४।५७)

युधिष्ठिर उवाच—

कस्मै भवान्मन्यतेऽर्घमेकस्मै कुरुनन्दन ।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥

वैशम्पायन उवाच—

ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य वीर्यवान् ।
वार्ष्णेयं मन्यते कृष्णं पूजनीयतमं भुवि ॥ ( शिशु० १४।५८ )
एष ह्येषां समस्तानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ॥
असूर्यमिव सूर्येण निर्वातमिव वायुना ।
भासितं ह्लादितं चैव कृष्णेनेदं सदो हि नः ॥
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् ।
उदजहेऽथ विधिवद्वार्ष्णेयायाऽर्घमुत्तमम् ॥
प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्मणा ।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ ( शिशु० १५।१ )
स उपालभ्य भीष्मं च धर्मराजं च संसदि ।
अथाऽऽक्षिपद्वासुदेवं चेदिराजो महाबलः ॥

( इति ३६ अध्यायः । )

शिशुपाल उवाच—

नाऽयमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य राजवत्पार्थिवार्हणाम् ॥
नायं युक्तः समाचारः पाण्डवेषु महात्मसु ।
यत्कामात्पुण्डरीकाक्षं पाण्डवार्चितवानसि ॥
बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ।
अयं च स्मृत्यतिक्रान्तो ह्यापगेयोऽल्पदर्शनः ॥
त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।
भवत्यभ्यधिकं भीष्मो लोकेष्ववमतः सताम् ॥
कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।
अर्हणामर्हति तथा यथा युष्माभिरार्चितः ॥
अथ वा मन्यसे कृष्णं स्थविरं कुरुपुङ्गव ।
वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ॥
अथ वा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान् ।
द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनम् ॥
आचार्यं मन्यसे कृष्णमथ वा कुरुनन्दन ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥
ऋत्विजं मन्यसे कृष्णमथ वा कुरुनन्दन ।

द्वैपायने स्थिते वृद्धे कथं कृष्णोऽर्चितस्त्वया ॥
भीष्मे शान्तनवे राजन्स्थिते पुरुषसत्तमे ।
स्वच्छन्दमृत्युके राजन्कथं कृष्णोऽर्चितस्त्वया ॥
अश्वत्थाम्नि स्थिते वीरे सर्वशास्त्रविशारदे ।
कथं कृष्णस्त्वया राजन्नर्चितः कुरुनन्दन ॥
दुर्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे ।
कृपे च भारताचार्ये कथं कृष्णस्त्वयाऽर्चितः ॥
द्रुमं किंपुरुषाचार्यमतिक्रम्य त्वयाऽर्चितः ।
भीष्मके चैव दुर्धर्षे पाण्डुवत्कृतलक्षणे ॥
येनात्मबलमाश्रित्य राजानो युधि निर्जिताः ।
तं च कर्णमतिक्रम्य कथं कृष्णस्त्वयाऽर्चितः ॥
नैवर्त्विङ्नैव चाचार्यो न राजा मधुसूदनः ।
अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ॥
अथ वाऽभ्यर्चनीयोऽयं युष्माकं मधुसूदनः ।
किं राजभिरिहानीतैरवमानाय भारत ॥ ( शिशु० १५।१८ )
वयं तु न भयादस्य कौन्तेयस्य महात्मनः ।
प्रयच्छाम करान्सर्वे न लोभान्न च सान्त्वनात् ॥
अस्य धर्मे प्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते ॥
किमन्यदवमानाद्धि येनेदं राजसंसदि ।
अप्राप्तलक्षणं कृष्णमर्घेणाऽर्चितवानसि ॥
योऽयं वृष्णिकुले जातो राजानं हतवान्पुरा ।
जरासन्धं महात्मानमन्यायेन दुरात्मवान् ॥
अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात् ।
दर्शितं कृपणत्वं च कृष्णेऽर्घस्य निवेदनात् ॥
यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः ।
ननु त्वयाऽपि बोद्धव्यं यां पूजां माधवोऽर्हसि ॥
न त्वयं पार्थिवेन्द्राणामपमानः प्रयुज्यते ।
त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन ॥
क्लीबे दारक्रिया यादृगन्धे वा रूपदर्शनम् ।
अराज्ञो राजवत्पूजा तथा ते मधुसूदन ॥
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् ॥
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात् ।
निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा ॥

( इति ३७ अध्यायः । )

वैशम्पायन उवाच—

ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ।
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः ॥
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् ।
अधर्मश्च परो राजन्पारुष्यं च निरर्थकम् ॥
न हि धर्मं परं जातु नावबुध्येत पार्थिवः ।
भीष्मः शान्तनवस्त्वेनं मावमंस्थास्त्वमन्यथा ॥
पश्य चैतान्महीपालांस्त्वत्तो वृद्धतरान्बहून् ।
मृष्यन्ते चार्हणं कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ॥
वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम् ।
नह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ॥

भीष्म उवाच—

नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते ॥
क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः ।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥
अस्यां हि समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥
न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ।
त्रयाणामपि लोकानामर्चनीयो महाभुजः ॥
कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः ।
जगत्सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥
तस्मात्सत्स्वपि वृद्धेषु कृष्णमर्चामि नेतरान् ।
यशः शौर्यं जयं चास्य विज्ञायाऽर्चां प्रयुज्महे ।
न च कश्चिदिहाऽस्माभिः सुबालोऽप्यपरीक्षितः ॥
गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः ।
ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ॥
वैश्यानां धान्यधनवाञ्शूद्राणामेव जन्मतः ।
पूज्यतायां च गोविन्दे हेतू द्वावपि संस्थितौ ॥
वेदवेदाङ्गविज्ञानं बलं चाप्यधिकं तथा ।
नृणां लोके हि कोऽन्योऽस्ति विशिष्टः केशवादृते ॥
अग्निहोत्रमुखा वेदा गायत्री छन्दसां मुखम् ।
राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ॥
नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखम् ।
पर्वतानां मुखं मेरुर्गरुडः पततां मुखम् ॥
ऊर्ध्वं तिर्यगधश्चैव यावती जगतो गतिः ।

सदेवकेषु लोकेषु भगवान्केशवो मुखम् ॥
अयं तु पुरुषो बालः शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥
यो हि धर्मं विचिनुयादुत्कृष्टं मतिमान्नरः ।
स वै पश्येद्यथा धर्मं न तथा चेदिराडयम् ॥
अथैनां दुष्कृतां पूजां शिशुपालो व्यवस्यति ।
दुष्कृतायां यथान्यायं तथाऽयं कर्तुमर्हति ॥

(इति ३८ अध्यायः ।)

वैशम्पायन उवाच—

एवमुक्त्वा ततो भीष्मो विरराम महाबलः ।
व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः ॥
केशवं केशिहन्तारमप्रमेयपराक्रमम् ।
पूज्यमानं मया यो वः कृष्णं न सहते नृपः ॥
सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम् ।
एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः ॥
स एव हि मया वध्यो भविष्यति न संशयः ।
ततो न व्याजहारैषां कश्चिद् बुद्धिमतां सताम् ॥
मानिनां बलिनां राज्ञां मध्ये वै दर्शिते पदे ।
ततोऽपतत्पुष्पवृष्टिः सहदेवस्य मूर्धनि ॥
अदृश्यरूपा वाचश्चाप्यब्रुवन्साधु साध्विति ।
आविध्यदजिनं कृष्णं भविष्यद्भूतजल्पकः ॥
सर्वसंशयनिर्मोक्ता नारदः सर्वलोकवित् ।
उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः ॥
कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ।
जीवन्मृतास्तु ते ज्ञेया न संभाष्याः कदाचन ॥

वैशम्पायन उवाच—

पूजयित्वा च पूजार्हान्ब्रह्मक्षत्रविशेषवित् ।
सहदेवो नृणां देवः समापयत कर्म तत् ॥
तस्मिन्नभ्यर्चिते कृष्णे सुनीथः शत्रुकर्षणः ।
अतिताम्रेक्षणः कोपादुवाच मनुजाधिपान् ॥
स्थितः सेनापतिर्योऽहं मन्यध्वं किंतु सांप्रतम् ।
युधि तिष्ठाम संनह्य समेतान्वृष्णिपाण्डवान् ॥
इति सर्वान्समुत्साह्य राज्ञस्तांश्चेदिपुङ्गवः ।
यज्ञोपघाताय ततः सोऽमन्त्रयत राजभिः ॥
तत्राहूता गताः सर्वे सुनीथप्रमुखा गणाः ।
समदृश्यन्त संक्रुद्धा विवर्णवदनास्तथा ॥

युधिष्ठिराभिषेकं च वासुदेवस्य चार्हणम् ।
न स्याद्यथा तथा कार्यमेवं सर्वे तदाऽब्रुवन् ॥
सुहृद्भिर्वार्यमाणानां तेषां हि वपुराबभौ ।
आमिषादपकृष्टानां सिंहानामिव गर्जताम् ॥
तं बलौघमपर्यन्तं राजसागरमक्षयम् ।
कुर्वाणं समयं कृष्णो युद्धाय बुबुधे तदा ॥
(इति ३९ अध्यायः ।)

वैशम्पायन उवाच—

ततः सागरसंकाशं दृष्ट्वा नृपतिमण्डलम् ।
संवर्तवाताभिहतं भीमं क्षुब्धमिवार्णवम् ॥
रोषात्प्रचलितं सर्वमिदमाह युधिष्ठिरः ।
भीष्मं मतिमतां मुख्यं वृद्धं कुरुपितामहम् ॥
असौ रोषात्प्रचलितो महान्नृपतिसागरः ।
अत्र यत्प्रतिपत्तव्यं तन्मे ब्रूहि पितामह ॥
यज्ञस्य च न विघ्नः स्यात्प्रजानां च हितं भवेत् ।
यथा सर्वत्र तत्सर्वं ब्रूहि मेऽद्य पितामह ॥
इत्युक्तवति धर्मज्ञे धर्मराजे युधिष्ठिरे ।
उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ॥
मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति ।
शिवः पन्थाः सुनीतोऽत्र मया पूर्वतरं वृतः ॥
न हि संबुध्यते यावत्सुप्तः सिंह इवाच्युतः ।
तेन सिंहीकरोत्येतान्नृसिंहश्चेदिपुङ्गवः ॥
पार्थिवान्पार्थिवश्रेष्ठः शिशुपालोऽप्यचेतनः ।
सर्वान्सर्वात्मना तात नेतुकामो यमक्षयम् ॥
नूनमेतत्समादातुं पुनरिच्छत्यधोक्षजः ।
यदस्य शिशुपालस्य तेजस्तिष्ठति भारत ॥
आदातुं च नरव्याघ्रो यं यमिच्छत्ययं तदा ।
तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा ॥

वैशम्पायन उवाच—

इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः ।
भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत ॥
(इति ४० अध्यायः ।)

शिशुपाल उवाच—

बिभीषिकाभिर्बह्वीभिर्भीषयन्सर्वपार्थिवान् ।
न व्यपत्रपसे कस्माद्वृद्धः सन्कुलपांसनः ॥ (शिशु० १५।१९)
युक्तमेतत्तृतीयायां प्रकृतौ वर्तता त्वया ।
वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तमः ॥

नावि नौरिव संबद्धा यथाऽन्धो वाऽन्धमन्वियात् ।
तथाभूता हि कौरव्या येषां भीष्म त्वमग्रणीः ॥
पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः । (शिशु० १५।३६)
त्वया कीर्तयताऽस्माकं भूयः प्रव्यथितं मनः ॥
अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः ।
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ॥
यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः ।
तमिमं ज्ञानवृद्धः सन्गोपं संस्तोतुमिच्छसि ॥
यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किम् ।
तौ वाऽश्ववृषभौ भीष्म यौ न युद्धविशारदौ ॥
चेतनारहितं काष्ठं यद्यनेन निपातितम् ।
पादेन शकटं भीष्म तत्र किं कृतमद्भुतम् ॥ (शिशु० १५।३७)
वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः ।
तदा गोवर्धनो भीष्म न तच्चित्रं मतं मम ॥
भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्धनि ।
इति ते भीष्म शृण्वानाः परे विस्मयमागताः ॥
यस्य चानेन धर्मज्ञ भुक्तमन्नं बलीयसः ।
स चानेन हतः कंस इत्येतन्न महाद्भुतम् ॥
न ते श्रुतमिदं भीष्म नूनं कथयतां सताम् ।
यद्वक्ष्ये त्वामधर्मज्ञं वाक्यं कुरुकुलाधम ॥
स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु च ।
यस्य चान्नानि भुंजीत यत्र च स्यात्प्रतिश्रयः ॥
इति सन्तोऽनुशासन्ति सज्जनं धर्मिणः सदा ।
भीष्म लोके हि तत्सर्वं वितथं त्वयि दृश्यते ॥
ज्ञानवृद्धं च वृद्धं च भूयांसं केशवं मम ।
अजानत इवाख्यासि संस्तुवन्कौरवाधम ॥
गोघ्नः स्त्रीघ्नश्च सन्भीष्म त्वद्वाक्याद्यदि पूज्यते ।
एवंभूतश्च यो भीष्म कथं संस्तवमर्हति ॥
न गाथा गाथिनं शास्ति बहु चेदपि गायति ।
प्रकृतिं यान्ति भूतानि भूलिंगशकुनिर्यथा ॥
नूनं प्रकृतिरेषा ते जघन्या नात्र संशयः ।
अतः पापीयसी चैषां पाण्डवानामपीष्यते ॥
येषामर्च्यतमः कृष्णस्त्वं च येषां प्रदर्शकः ।
धर्मवांस्त्वमधर्मज्ञः सतां मार्गादवप्लुतः ॥
चेत्त्वं धर्मं विजानासि यदि प्राज्ञा मतिस्तव ।
अन्यकामा हि धर्मज्ञा कन्यका प्राज्ञमानिना ।

अम्बा नामेति भद्रं ते कथं साऽपहृता त्वया ॥
तां त्वयाऽपहृतां भीष्म कन्यां नैषितवान्यतः ।
भ्राता विचित्रवीर्यस्ते सतां मार्गमनुष्ठितः ॥
दारयोर्यस्य चान्येन मिषतः प्राज्ञमानिनः ।
तव जातान्यपत्यानि सज्जनाचरिते पथि ॥
को हि धर्मोऽस्ति ते भीष्म ब्रह्मचर्यमिदं वृथा ।
यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः ॥
न त्वहं तव धर्मज्ञ पश्याम्युपचयं क्वचित् ।
न हि ते सेविता वृद्धा य एवं धर्ममब्रवीः ॥
व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत् ।
सर्वं तदनपत्यस्य मोघं भवति निश्चयात् ॥
सोऽनपत्यश्च वृद्धश्च मिथ्याधर्मानुसारकः ।
हंसवत्त्वमपीदानीं ज्ञातिभ्यः प्राप्नुया वधम् ॥
एवं हि कथयन्त्यन्ये नरा ज्ञानविदः पुरा ।
भीष्म यत्तदहं सम्यग्वक्ष्यामि तव शृण्वतः ॥

( इति ४१ अध्यायः । )

शिशुपाल उवाच—

स मे बहुमतो राजा जरासन्धो महाबलः ।
योऽनेन युद्धं नेयेष दासोऽयमिति संयुगे ॥
केशवेन कृतं कर्म जरासन्धवधे तदा ।
भीमसेनार्जुनाभ्यां च कस्तत्साध्विति मन्यते ॥
अद्वारेण प्रविष्टेन च्छद्मना ब्रह्मवादिना ।
दृष्टः प्रभावः कृष्णेन जरासन्धस्य भूपतेः ॥
इदं त्वाश्चर्यभूतं मे यदीमे पाण्डवास्त्वया ।
अपकृष्टाः सतां मार्गान्मन्यन्ते तच्च साध्विति ॥
अथ वा नैतदाश्चर्यं येषां त्वमसि भारत ।
स्त्रीसधर्मा च वृद्धश्च सर्वार्थानां प्रदर्शकः ॥

वैशम्पायन उवाच—

तस्य तद्वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु ।
चुकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान् ॥
भूयः क्रोधाभिताम्राक्षे रक्ते नेत्रे बभूवतुः ।
त्रिशिखां भ्रुकुटीं चाऽस्य ददृशुः सर्वपार्थिवाः ॥
दन्तान्संदंशतस्तस्य कोपाद्ददृशुराननम् ।
उत्पतन्तं तु वेगेन जग्राहैनं मनस्विनम् ।
भीष्म एव महाबाहुर्महासेनमिवेश्वरः ॥
तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत ।

गुरुणा विविधैर्वाक्यैः क्रोधः प्रशममागतः ॥
नातिचक्राम भीष्मस्य स हि वाक्यमरिंदमः ।
ततश्चेदिपतेर्वाक्यं श्रुत्वा तत्कुरुसत्तमः ।
भीमसेनमुवाचेदं भीष्मो मतिमतां वरः ॥
(इति ४२ अध्यायः ।)

भीष्म उवाच—

चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः ।
रासभारावसदृशं रराास च ननाद च ॥
तेनास्य मातापितरौ त्रेसतुस्तौ सबान्धवौ ।
वैकृतं तस्य तौ दृष्ट्वा त्यागाय कुरुतां मतिम् ॥
ततः सभार्यं नृपतिं सामात्यं सपुरोहितम् ।
चिन्तासंमूढहृदयं वागुवाचाशरीरिणी ॥
एष ते नृपते पुत्रः श्रीमाञ्जातो बलाधिकः ।
तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुम् ॥
न चैव तस्य मृत्युर्वै न कालः प्रत्युपस्थितः ।
मृत्युर्हन्ताऽस्य शस्त्रेण स चोत्पन्नो नराधिप ॥
संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः ।
पुत्रस्नेहाभिसंतप्ता जननी वाक्यमब्रवीत् ॥
येनेदमीरितं वाक्यं ममैतं तनयं प्रति ।
प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ॥
याथातथ्येन भगवान्देवो वा यदि वेतरः ।
श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति ॥
अन्तर्भूतं ततो भूतमुवाचेदं पुनर्वचः ।
यस्योत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ ॥
पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ ।
तृतीयमेतद्बालस्य ललाटस्थं तु लोचनम् ॥
निमज्जिष्यति यं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति ।
त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतम् ॥
पृथिव्यां पार्थिवाः सर्वे अभ्यागच्छन्दिदृक्षवः ।
ततश्चेदिपुरीं प्राप्तौ संकर्षणजनार्दनौ ॥
यादवौ यादवीं द्रष्टुं स्वसारं तौ पितुस्तदा ।
कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ ॥
साऽभ्यर्च्य तौ तदा वीरौ प्रीत्या चाऽभ्यधिकं ततः ।
पुत्रं दामोदरोत्सङ्गे देवी सन्यदधात्स्वयम् ॥
न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ ।
पेततुस्तच्च नयनं न्यमज्जत ललाटजम् ॥
तद् दृष्ट्वा व्यथिता त्रस्ता वरं कृष्णमयाचत ।

ददस्व मे वरं कृष्ण भयार्ताया महाभुज ॥
त्वं ह्यार्तानां समाश्वासो भीतानामभयप्रदः ।
एवमुक्तस्ततः कृष्णः सोऽब्रवीद्यदुनन्दनः ॥
मा भैस्त्वं देवि धर्मज्ञे न मत्तोऽस्ति भयं तव ।
ददामि कं वरं किं च करवाणि पितृष्वसः ॥
शक्यं वा यदि वाऽशक्यं करिष्यामि वचस्तव ॥
एवमुक्ता ततः कृष्णमब्रवीद्यदुनन्दनम् ॥
शिशुपालस्याऽपराधान्क्षमेथास्त्वं महाबल ।
मत्कृते यदुशार्दूल विद्ध्येनं मे वरं प्रभो ॥

कृष्ण उवाच—

अपराधशतं क्षाम्यं मया ह्यस्य पितृष्वसः ।
पुत्रस्य ते वधार्हस्य मा त्वं शोके मनः कृथाः ॥

भीष्म उवाच—

एवमेष नृपः पापः शिशुपालः सुमन्दधीः ।
त्वां समाह्वयते वीर गोविन्दवरदर्पितः ॥

(इति ४३ अध्यायः ।)

भीष्म उवाच—

नैषा चेदिपतेर्बुद्धिर्यया त्वाह्वयतेऽच्युतम् ।
नूनमेष जगद्भर्तुः कृष्णस्यैव विनिश्चयः ॥

वैशम्पायन उवाच—

ततो न ममृषे चैद्यस्तद्भीष्मवचनं तदा ।
उवाच चैनं संक्रुद्धः पुनर्भीष्ममथोत्तरम् ॥

शिशुपाल उवाच—

द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः ।
यस्य संस्तववक्ता त्वं बन्दिवत्सततोत्थितः ॥
संस्तवे च मनो भीष्म परेषां रमते यदि ।
तदा संस्तौषि राज्ञस्त्वमिमं हित्वा जनार्दनम् ॥
धनुर्धराणां प्रवरं रुक्मिणां पुरुषोत्तमम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥

वैशम्पायन उवाच—

ततश्चेदिपतेः श्रुत्वा भीष्मः स कटुकं वचः ।
उवाचेदं वचो राजंश्चेदिराजस्य शृण्वतः ॥
इच्छतां किल नामाऽहं जीवाम्येषां महीक्षिताम् ।
सोऽहं न गणयाम्येतांस्तृणेनापि नराधिपान् ॥
एवमुक्ते तु भीष्मेण ततः संचुक्रुशुर्नृपाः ।

3

केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य तद्वचः ।
पापोऽवलिप्तो वृद्धश्च नाऽयं भीष्मोऽर्हति क्षमाम् ॥
हन्यतां दुर्मतिर्भीष्मः पशुवत्साध्वयं नृपाः ।
सर्वैः समेत्य संरब्धो दह्यतां वा कटाग्निना ॥
इति तेषां वचः श्रुत्वा ततः कुरुपितामहः ।
उवाच मतिमान्भीष्मस्तानेव वसुधाधिपान् ॥
उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ।
यत्तु वक्ष्यामि तत्सर्वं शृणुध्वं वसुधाधिपाः ॥
पशुवद्धातनं वा मे दहनं वा कटाग्निना ।
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम् ॥ ( शिशु० १५।४६ )
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः ।
यस्य वा त्वरते बुद्धिर्मरणाय स माधवम् ॥
कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् ।
यादवस्यैव देवस्य देहं विशतु पातितः ॥ (इति ४४ अध्यायः ।)

वैशम्पायन उवाच—

ततः श्रुत्वैव भीष्मस्य चेदिराडुरुविक्रमः ।
युयुत्सुर्वासुदेवेन वासुदेवमुवाच ह ॥
आह्वये त्वां रणं गच्छ मया सार्धं जनार्दन ।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः ॥
सह त्वया हि मे वध्याः सर्वथा कृष्ण पाण्डवाः ।
नृपतीन्समतिक्रम्य यैरराजा त्वमर्चितः ॥
ये त्वां दासमराजानं बाल्यादर्चन्ति दुर्मतिम् ।
अनर्हमर्हवत्कृष्ण वध्यास्त इति मे मतिः ॥
एवमुक्ते ततः कृष्णो मृदुपूर्वमिदं वचः ।
उवाच पार्थिवान्सर्वान्स समक्षं च वीर्यवान् ॥
एष नः शत्रुरत्यन्तं पार्थिवाः सात्वतीसुतः ।
सात्वतानां नृशंसात्मा न हितोऽनपकारिणाम् ॥
प्राग्ज्योतिषपुरं यातानस्माञ्ज्ञात्वा नृशंसकृत् ।
अदहद् द्वारकामेष स्वस्रीयः सन्नराधिपाः ॥
क्रीडतो भोजराजस्य एष रैवतके गिरौ ।
हत्वा बध्वा च तान्सर्वानुपायात्स्वपुरं पुरा ॥
अश्वमेधे हयं मेध्यमुत्सृष्टं रक्षिभिर्वृतम् ।
पितुर्मे यज्ञविघ्नार्थमहरत्पापनिश्चयः ॥
सौवीरान्प्रतियातां च बभ्रोरेष तपस्विनः ।
भार्यामभ्यहरन्मोहादकामां तामितोगताम् ॥
एष मायाप्रतिच्छन्नः करूषार्थे तपस्विनीम् ।
जहार भद्रां वैशालीं मातुलस्य नृशंसकृत् ॥

पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम् ।
दिष्ट्या हीदं सर्वराज्ञां संनिधावद्य वर्तते ॥
पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम् ।
कृतानि तु परोक्षं मे यानि तानि निबोधत ॥
इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम् ।
अवलेपाद्वधार्हस्य समग्रे राजमण्डले ॥
रुक्मिण्यामस्य मूढस्य प्रार्थनाऽऽसीन्मुमूर्षतः ।
न च तां प्राप्तवान्मूढः शूद्रो वेदश्रुतीमिव ॥

वैशम्पायन उवाच—

एवमादि ततः सर्वे सहितास्ते नराधिपाः ।
वासुदेववचः श्रुत्वा चेदिराजं व्यगर्हयन् ॥
तस्य तद्वचनं श्रुत्वा शिशुपालः प्रतापवान् ।
जहास स्वनवद्धासं वाक्यं चेदमुवाच ह ॥
मत्पूर्वां रुक्मिणीं कृष्ण संसत्सु परिकीर्तयन् ।
विशेषतः पार्थिवेषु व्रीडां न कुरुषे कथम् ॥
मन्यमानो हि कः सत्सु पुरुषः परिकीर्तयेत् ।
अन्यपूर्वां स्त्रियं जातु त्वदन्यो मधुसूदन ॥
क्षम वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम ।
तथा ब्रुवत एवाऽस्य भगवान्मधुसूदनः ।
उवाच भगवानुच्चैर्वाक्यं वाक्यविशारदः ॥
शृण्वन्तु मे महीपाला येनैतत्क्षमितं मया ।
अपराधशतं क्षाम्यं मातुरस्यैव याचने ॥
दत्तं मया याचितं च तद्वै पूर्णं हि पार्थिवाः ।
अधुना वधयिष्यामि पश्यतां वो महीक्षिताम् ॥
एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात् ।
व्यपाहरच्छिरः क्रुद्धश्चक्रेणाऽमित्रकर्षणः ॥
स पपात महाबाहुर्वज्राहत इवाऽचलः ॥
ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशुर्नृपाः ।
उत्पतन्तं महाराज गगनादिव भास्करम् ॥
ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् ।
ववन्दे तत्तदा तेजो विवेश च नराधिप ॥
तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः ।
यद्विवेश महाबाहुं तत्तेजः पुरुषोत्तमम् ॥
अनभ्रे प्रववर्ष द्यौः पपात ज्वलिताऽशनिः ।
कृष्णेन निहिते चैद्ये चचाल च वसुन्धरा ॥

( इति ४५ अध्यायः । )

# विषयानुक्रमणी।

॥ श्रीः ॥

श्रीमन्माघकविप्रणीतं

# शिशुपालवधम् ।

## मल्लिनाथकृतया सर्वंकषाव्याख्यया समेतम् ।

---

### प्रथमः सर्गः ।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

दन्ताञ्चलेन धरणीतलमुन्नमय्य पातालकेलिषु धृतादिवराहलीलम् ।
उल्लाघनोत्फणफणाधरगीयमानक्रीडावदानमिभराजमुखं नमामः ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं संनिधिं संनिधिं क्रियात् ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥

मल्लिनाथः सुधीः सोऽयं महोपाध्यायशब्दभाक् ।
विधत्ते माघकाव्यस्य व्याख्यां सर्वंकषाभिधाम् ॥

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालंक्रिया-
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वगाः ।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे मिमङ्क्षन्ति ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्वंकषाम् ॥

नेतास्मिन्यदुनन्दनः स भगवान्वीरप्रधानो रसः
शृङ्गारादिभिरङ्गवान्विजयते पूर्णा पुनर्वर्णना ।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलं
धन्यो माघकविर्वयं तु कृतिनस्तत्सूक्तिसंसेवनात् ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥

अथ तत्रभवान् माघकविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥' इत्यालंकारिकवचनप्रामाण्यात्

काव्यस्यानेकश्रेयःसाधनतां, 'काव्यालापांश्च वर्जयेत्' इति निषेधस्यासत्काव्यविषयतां च पश्यन् शिशुपालवधाख्यं काव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्यफलं शिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति—

**श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।**
**वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥**

**श्रिय इति** ॥ तत्रादौ श्रीशब्दप्रयोगात् वर्णगणादिशुद्धेरभ्युच्चयः । तदुक्तम्—'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥' इति । श्रियो लक्ष्म्याः पतिः । अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम् । 'राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणात् । जगन्निवासो जगतामाधारः । कुक्षिस्थाखिलभुवन इति यावत् । तथापि जगत् लोकं शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं श्रीमति लक्ष्मीयुक्ते वसुदेवसद्मनि वसुदेवरूपिणः कश्यपस्य वेश्मनि वसन् कृष्णरूपेण तिष्ठन् हरिर्विष्णुरम्बरादवतरन्तमायान्तम् । इन्द्रसंदेशकथनार्थमिति भावः । हिरण्यस्य गर्भो हिरण्यगर्भो ब्रह्मा ब्रह्माण्डप्रभवत्वात् । तस्याङ्गभुवं तनूजम् । अथवा तस्याङ्गादवयवादुत्सङ्गाख्याद्भवतीति हिरण्यगर्भाङ्गभूस्तं मुनिम् । नारदमित्यर्थः । 'उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः' इति भागवतात् । ददर्श । कदाचिदिति शेषः । अत्राल्पीयसि वसुदेवसद्मनि सकलजगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकप्रभेदोऽर्थालंकारः । तदुक्तम्—'आधाराधेययोरानुरूप्याभावोऽधिको मतः' इति । जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । तथा तकारसकारादेः केवलस्यासकृदावृत्त्या जगज्जगदिति सकृद्व्यञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ[1] शब्दालंकारौ । एषां चान्योन्यनैरपेक्ष्येणैकत्र समावेशात्तिलतण्डुलवत्संसृष्टिः । सर्गेऽस्मिन्वंशस्थं वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १ ॥

तदानीं जनैर्विस्मयादीक्षितुं प्रवृत्तमित्याह—

**गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।**
**पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥२॥**

**गतमिति** ॥ अविद्यमानावूरू यस्य सोऽनूरुः स सारथिर्यस्य तस्यानूरुसारथेः सूर्यस्य गतं गतिः । भावे क्तः । तिरश्चीनं तिर्यग्भूतम् । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति तिर्यक्शब्दादञ्चत्यन्तात्प्रातिपदिकात् स्वार्थे खप्रत्ययः । हविर्भुजोऽग्नेरूर्ध्वज्वलनमूर्ध्वस्फुरणं प्रसिद्धम् । इदं तु सर्वतो विसारि धामाधः पतति । किमेतदिति सूर्याग्निविलक्षणमदृष्टपूर्वमिदं धाम किमात्मकं स्यादित्याकुलं विस्मयात्संभ्रान्तं यथा तथा जनैरीक्षितमीक्षणं कृतम् । सकर्मकादप्यविवक्षिते कर्मणि

पाठा०—१ वृत्त्यनुप्रासच्छेकानुप्रासभेदौ.

क्तः । 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वचनात् । केचित्कर्मणि क्तान्तं कृत्वा ईक्षितं मुनिं ददर्शेति पूर्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्मेणाधिक्यवर्णनाद्व्यतिरेकः । तदुक्तं काव्यप्रकाशे—'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति । 'धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः' इति हेमचन्द्रः । दिवाकरस्तु वृत्तरत्नाकरटीकायां प्रथमपठितेन 'द्विधाकृतात्मा किमयं दिवाकरो, विधूमरोचिः किमयं हुताशनः' इति चरणद्वयेन सहेममेव श्लोकं षट्पदच्छन्दस उदाहरणमाह । तत्राद्यचरणद्वयेन संदेहालंकारो गतमिति तन्निरासश्च बोध्य इत्युपरिष्टात् ॥ २ ॥

अथ भगवान्निरणैषीदित्याह—

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥ ३ ॥**

चय इति ॥ विभुर्वस्तुतत्त्वावधारणसमर्थः स हरिः पुरा प्रथमं त्विषां चय इत्यवधारितं तेजःपुञ्जमात्रत्वेन विनिश्चितम् । ततः प्रत्यासन्ने सति विभाविता विमृष्टा आकृतिः संस्थानं यस्य तं तथोक्तम् । अत एव शरीरी चेतन इत्यवधारितम् । ततो विभक्ता विविच्य गृहीता अवयवा मुखादयो यस्य तं तथोक्तम् । अत एव पुमानित्यवधारितम् । अमुमागच्छन्तं व्यक्तिविशेषं नारदं वास्तवाभिप्रायेणेति पुंलिङ्गनिर्वाहः । क्रमात् पूर्वोक्तसामान्यविशेषज्ञानक्रमेण । लोकदृष्ट्येदमुक्तम् । हरिस्तु सर्वं वेदैवेति तत्त्वम् । नारद इत्यबोधि । नारदं बुद्धवानित्यर्थः । नारदस्य कर्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया । तिङ्गमुपसंख्यानस्योपलक्षणत्वात् । यथाह वामनः—'निपातेनाभिहिते कर्मणि न कर्मविभक्तिः । परिगणनस्य प्रायिकत्वात्' इति बुध्यतेः कर्तरि लुङ् । 'दीपजन–' ( ३।१।६१ ) इत्यादिना चिण् । 'चिणो लुक्' ( ६।४।१०४ ) इति तस्य लुक् । अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनयोः पदार्थयोर्विशेषणवृत्त्या शरीरित्वपुंस्त्वावधारणहेतुत्वेनोपन्यासात्पदार्थहेतुकं काव्यलिङ्गमलंकारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥ ३ ॥

अथ सप्तभिर्मुनिं विशिनष्टि—

**नवानधोऽधो बृहतः पयोधरान्समूढकर्पूरपरागपाण्डुरम् ।**
**क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शंभुना ॥४॥**

नवानित्यादिभिः ॥ कीदृशममुम् । नवान्सद्यः संभृतसलिलान् । अतिनीलानिति यावत् । बृहतो विपुलान्पयोधरान्मेघानधोऽधः । मेघानां समीपाधःप्रदेशे स्थितमिति शेषः । 'उपर्यध्यधसः सामीप्ये' ( ८।१।७ ) इति द्विर्भावः । तद्योगे द्वितीया । 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु' इत्यादिवचनात् । समूढः पुञ्जी-

पाठा०–१ '°भ्यां तदसंभाविनाधः'. २ '°कालङ्कारः'. ३ 'द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ।।' इत्यधिकम्.

कृतः। 'समूढः पुञ्जिते भुग्ने' इति विश्वः। कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुरम्। अत एव क्षणं मेवसमीपावस्थानक्षणे। अत्यन्तसंयोगे द्वितीया। क्षणेषु ताण्डवोत्सवेषु। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्युभयत्राप्यमरः। उत्क्षिप्ता उपरि धारिता गजेन्द्रस्य कृत्तिश्चर्म येन तेन। 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः। भूत्या भस्मना सितेन। 'भूतिर्भस्मनि संपदि' इत्यमरः। शंभुना हरेण स्फुटा उपमा सादृश्यं यस्य तं स्फुटोपमम्। स्फुटशंभूपममित्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। सदृशपर्याययोस्तुलोपमाशब्दयोः 'अतुलोपमाभ्याम्–' इति निषेधात्सादृश्यवाचित्वे तृतीयेत्याहुः। केचिदिमं श्लोकं चयस्त्विषामित्यतः प्राग्लिखित्वा व्याचक्षते। तेषां पुंस्त्वावधारणात्प्राक् तेजःपिण्डमात्रस्य शंभूपमौचित्यं चिन्त्यम्॥ ४॥

**दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम्।**
**विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव॥ ५॥**

दधानमिति॥ पुनः कीदृशम्। अम्भोरुहकेसरद्युतीः पद्मकिंजल्कप्रभापिशङ्गीरित्यर्थः। जटा दधानम्, स्वयं तु शरच्चन्द्रमरीचिरिव रोचिर्यस्य तम्। धवलमित्यर्थः। अत एव विपाकेन परिणामेन पिङ्गाः पिङ्गलास्तुहिनस्थल्यां तुषारभूमौ रोहन्तीति तुहिनस्थलीरुहः व्रततीततीर्लताव्यूहान् 'वल्ली तु व्रततिर्लता' इत्यमरः। दधानं धराधरेन्द्रो हिमवान् तुहिनस्थलीति लिङ्गान्नारदोपमानत्वाच्च तमिव स्थितम्॥ ५॥

**पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति।**
**सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम्॥ ६॥**

पिशङ्गेति॥ पुनः कीदृशम्। मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी पिशङ्ग्या मौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुक् तम्। 'सत्सूद्विष–' (३।२।६१) इत्यादिना क्विप्। 'स्त्रियाः पुंवत्–' (६।३।३४) इति पिशङ्गशब्दस्य पुंवद्भावः। अर्जुनच्छविं धवलकान्तिम्। 'वलक्षो धवलोऽर्जुनः' इत्यमरः। अञ्जनद्युत्यञ्जनवर्णं एणाजिनं कृष्णमृगचर्म वसानमाच्छादयन्तम्। 'वस आच्छादने' इति धातोः शानच्। सुवर्णसूत्रेण कनकमेखलया आकलितं बद्धमधराम्बरमन्तरीयकं यस्यास्तां शितिवाससो नीलाम्बरस्य रामस्य तनुं विडम्बयन्तम्। अनुकुर्वाणमित्यर्थः। आर्थीयमुपमा॥ ६॥

**विहंगराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः।**
**कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गणैरिव॥ ७॥**

विहंगेति॥ पुनः। विहंगराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैरायतैर्दीर्घैः। हिरण्यस्य विकारो हिरण्मयी। 'दाण्डिनायन–' (६।४।१७४) इत्यादिना मयटि यलोपनिपातः। तस्यामुर्व्यां रुहा रूढाः। इगुपधालक्षणः कप्रत्ययः। तासां वल्लीनां तन्तुभिस्तत्तुल्यैः सूक्ष्मावयवैः। उपादानगुणात्। हिरण्मयैः कृतोपवीतं शोभार्थं कल्पितयज्ञसूत्रं स्वयं हिमशुभ्रम्। अत एव घनान्ते शरदि तडितां गणैरुपलक्षितम्। 'तडित्सौदामनी विद्युत्' इत्यमरः। उच्चैरेवोच्चकैरुन्नतं घनं मेघमिव स्थितम्॥ ७॥

---

पाठा०–१ 'गुणैः'.

